# ॥ श्रीस्वयंवर पार्वतीस्तोत्रं अथवा मन्त्रमालास्तोत्रं ॥

बन्धूकवर्णामरुणां सुगात्राम्
शम्भुं समुद्दिश्य शनैरुपेताम् ।
अम्भोजमृद्वीमभिलाषदात्रीं
सम्भावये निर्जरदारुकल्पाम् ॥ १॥

हीम्मन्थराणि चरणाग्रगतिप्रपाते-
ष्वामञ्जुसंक्वणितकङ्कणकिङ्किणीनि ।
कामं कुमारि! तव तानि शिवे! स्मरामि
क्षेमङ्कराणि जनकालयखेलनानि ॥ २॥

योगेन बाल्यवयसो ललितां पुरस्तात्
द्रागेव कण्ठविलसत् कनकोर्मिकौघाम् ।
आकम्रनद्धरशनां भवतीं निरीक्षे
श्रीकण्ठभामिनि! कदा प्रपदीनवेणीम् ॥ ३॥

गिर्यल्पमुग्धविशदं नवयौवनं श्री-
धुर्यं विलासमयमक्ष्णि कृशं विलग्ने ।
पर्युच् छ्रितं कुचभरे जघने घनं यत्
पर्युत्सुकोऽस्मि सततं जननि प्रसीद ॥ ४॥

निर्धूतकुण्डलमुदञ्चितघर्मलेशं
विस्रस्तकेशमभितश्चलदीक्षणान्तम् ।
निर्ध्वानिकङ्कणमुदग्रकुचान्तमन्तर्-
बध्नामि तातगृहकन्दुकखेलनं ते ॥ ५॥

योगेश्वरं प्रचुरभक्ति गिरीशमारा-
देकान्तवर्तिनमुपेत्य तपश्चरन्तं ।
आकांक्षया परिचरिष्णुमनाकुलां त्वां
ये केचिदीश्वरि भजन्ति त एव धन्याः ॥ ६॥

गिर्यात्मजे! मदनदाहमहावमान-
पर्याकुला पुरहरे हृदयं निधाय ।
कुर्यास्तपो विदधती कुशलानि भूभृत्-
पर्यायपीनकुचकुम्भविशुम्भदङ्गी ॥ ७॥

निध्याय मानसदृशा मुहुरिन्दुचूडं

मद्ध्ये स्थिता रहसि पञ्चहुताशनानाम् ।
तत्तादृशेन तपसा जगदण्डभाजां
वित्रासदात्रि परिपाहि सदाशिवे! नः ॥ ८॥

योग्यं वटोर्वपुरुपस्थितमात्मभक्तिं
दीर्घां परीक्षितुमनुक्षणमाक्षिपन्तम् ।
साक्षाग्दिरीशमवधूय रुषा प्रयाते
द्राक्तेन संश्रितपदां भवतीं भजामः ॥ ९॥

गेहे निजे वरणदामलसत्कराब्जां
व्याहारिनूपुरमुदश्चितमन्दहासाम् ।
नीहारुभानुधरमुच्चलितां वरीतुं
मोहावहां त्रिभुवनस्य भजामहे त्वाम् ॥ १०॥

श्वस्ताहि कङ्कणविलोकनभीतभीतं
प्रत्यग्ररागविवशं मम तं निधेहि ।
उत्स्वेदवेपथु पिनाकभृता गृहीतं
रुद्राणि दक्षिणकराम्बुजमुत्तमांगे ॥ ११॥

रिष्टापहं भवतु भर्तृनखेन्दुबिम्ब-
स्पष्टानुबिम्बिततनुं विबुधापगां ताम् ।
दृष्ट्वाशु रागरभसोदयशोणकोणं
दृष्टिद्वयं तव करग्रहणे स्थितं नः ॥ १२॥

योगे नवे तव भवानि शिवानि दद्यात्
द्रागेव सत्वरमपत्रपया निवृत्तम् ।
साकम्पमालिवचनैर्विहिताभिमुख्यं
द्रागुत्स्मितं पुरभिदा परिरब्धमंगम् ॥ १३॥

गत्या नितम्बभरमन्थरया सलज्जै-
रर्धेक्षणैरसकलाक्षरवाग्विलासैः ।
हृद्यैश्च विभ्रमगुणैर् मदनारिधैर्य-
प्रस्तारद्दारिणि शिवे जननि प्रसीद ॥ १४॥

भद्रा मुखेन्दुनमनादभिवीक्षणेषु
प्रत्युक्तिदानविरमान्नवसत्कथासु ।
उद्वेपनादपि हठात्परिरम्भणेषु
पत्युः प्रमोदजननी जननि प्रसीद ॥ १५॥

यं नाथमादिमुनयो निगमोक्तिगुम्भे-
ष्वालक्ष्य तान्तमनसो विमुखीभवन्ति ।
सन्नह्य तेन दयितेन मनोजविद्या-
नन्दानुभूतिरसिके जननि प्रसीद ॥ १६॥

कल्याणकुन्तलभरं नवकल्पवल्ली-
पुष्पोल्लसद् बहुलसौरभलोभनीयम् ।
कल्याणदामशशिखण्डमखण्डशोभा-
कल्लोलितं तव महेश्वरि संश्रयामः ॥ १७॥

रिञ्चोलिका तव शिवे! निटिलालकानां
न्यञ्चत्पटीरतिलके निटिले विभान्ती ।
मञ्जुप्रसन्नमुखपद्मविहारिलक्ष्मी-
पिञ्छातपत्ररुचिरा हृदि नः समिन्धाम् ॥ १८॥

सम्यग्भ्रुवौ तव विलासभुवौ स्मरामः
सम्मुग्द्ध मन्मथशरासनचारुरूपे ।
हृन्मध्यगूढनिहितं हरधैर्यलक्ष्यं
यन्मूलयन्त्रितकटाक्षशरैर्विभिन्नम् ॥ १९॥

कम्राः सितासितरुचा श्रवणान्तदीर्घाः
बिम्बोकडम्बरभृतो निभृतानुकम्पाः ।
सम्पातुका मयि भवन्तु पिनाकिवक्त्र-
बिम्बाबुजन्ममधुपाः सति! ते कटाक्षाः ॥ २०॥

लग्नाभिराममृगनाभिविचित्रपत्रं
मग्नं प्रभासमुदये तव गण्डबिम्बम् ।
चित्ते विभातु सततं मणिकुण्डलोद्य-
द्रत्नानुबिम्बपरिचुम्बितमम्बिके नः ॥ २१॥

स्थाणोः सदा भगवतः प्रियतानिधानं
प्राणादपि प्रविरलस्मितलोभनीयम् ।
स्थानीकुरुष्व गिरिजे! तव बन्धुजीव-
श्रेणीसगन्धमधरं धिषणान्तरे नः ॥ २२॥

वन्दामहे कनकमंगलसूत्रशोभा-
सन्दीप्तकुङ्कुमवलित्रयभंगि रम्यम् ।

मन्द्रादिकस्वरविकस्वरनादविद्या-
सन्दर्भगर्भमगजे! तव कण्ठनालम् ॥ २३॥

रक्षार्थमत्र मम मूर्धनि धत्स्व नित्यं
दक्षारिगाढपरिरम्भरसानुकूलम् ।
अक्षामहेमकटकांगदरत्नशोभं
लाक्षाविलं जननि! पानियुगं त्वदीयम् ॥ २४॥

जम्भारिकुम्भिवरकुम्भनिभामुरोज-
कुम्भद्वयीं ललितसम्भृतरत्नमालाम् ।
शम्भोर्भुजैरनुदिनं निबिडांकपाली-
सम्भावितां भुवनसुन्दरि! भावयामः ॥ २५॥

गर्वापहे वटदलस्य तनूदरान्ते
निर्व्यूढभासि तव नाभिसरस्यगाधे ।
शर्वावलोकरुचिमेदुररोमवल्ली-
निर्वासिते वसतु मे धिषणामराली ॥ २६॥

मच्चेतसि स्फुरतु माररथांगभंगीं
उच्चैर्दधानमतिपीवरतानिधानम् ।
स्वच्छन्दरत्नरशनाकलितान्तरीय-
प्रच्छन्नमम्ब! तव कम्रनितम्बबिम्बम् ॥ २७॥

स्यन्दानुरागमदवारिपुरारिचेत-
स्सन्नागबन्धमणिवेणुकमूरुकाण्डम् ।
बन्दीकृतेन्द्रगजपुष्करमुग्धरम्भं
नन्दाम सुन्दरि! शिवे! हृदि सन्दधानाः ॥ २८॥

मुग्धोल्लसत्कनकनूपुरनग्धनाना-
रत्नाभयोर्ध्वगतया परितोऽभिरामम् ।
चित्तप्रसूतिजयकाहलकान्ति जंघा-
युग्मं त्वदीयमगनन्दिनि! चिन्तयामः ॥ २९॥

खट्वांगपाणिमकुटेन तदा तदा सं-
घृष्टाग्रयोः प्रणतिषु प्रणयप्रकोपे ।
अष्टांगपातसहितं प्रणतोस्मि लब्धु-
मिष्टां गतिं जननि! पादपयोजयोस्ते ॥ ३०॥

हृद्यर्पणं मम मृजन्तु तदा त्वदंग-
मुद्यद्रविद्युति भवेदिह सानुबिम्बम् ।
उत्तुंगदैत्यसुरमौलिभिरुह्यमाना
रुद्रप्रिये! तव पदाब्जभवाः परागाः ॥ ३१॥

दद्याः सुखानि मम चक्रकलान्तरस्त्था!
रक्ताम्बराभरणमाल्यधरा! जपाभा! ।
रुद्राणि! पाशसृणिचापशराग्रहस्ता!
कस्तूरिकातिलकिनी! नवकुङ्कुमार्दा! ॥ ३२॥

यत्पङ्कजन्मनिलयं करपद्मशुम्भ-
दम्भोरुहं भुवनमंगलमाद्रियन्ते ।
अम्भोरुहाक्ष सुकृतोत्करपाकमेकं
सम्भावये हृदि शिवे! तव शक्तिभेदं ॥ ३३॥

मन्दारकुन्दसुषमा करपल्लवोद्यत्
पुण्याक्षदामवरपुस्तकपूर्णकुम्भा ।
चन्द्रार्द्धचारुमकुटा नवपद्मसंस्था
सन्देदिवीतु भवती हृदि नस्त्रिणेत्रा ॥ ३४॥

मध्येकदम्बवनमास्थितरत्नडोलां
उद्यन्नखाग्रमुखरीकृतरत्नवीणाम् ।
अत्यन्तनीलकमनीयकलेबरां त्वां
उत्संगलालितमनोज्ञशुकीमुपासे ॥ ३५॥

वर्तामहे मनसि सन्दधतीं नितान्त-
रक्तां वराभयविराजिकरारविन्दाम् ।
उद्वेलमध्यवसतिं मधुरांगि! मायां
तत्त्वात्मिकां भगवतीं भवतीं भजन्तः ॥ ३६॥

शम्भुप्रियां शशिकलाकलितावतंसां
सम्भाविताभयवरां कुशपाशपाणिम् ।
सम्पात्प्रदाननिरतां भुवनेश्वरीं त्वां
शुम्भज्जपारुचमपारकृपामुपासे ॥ ३७॥

आरूढतुंगतुरगां मृदुबाहुवल्लीं
आरूढपाशसृणिवेत्रलतां त्रिणेत्राम् ।
आरोपितामखिलसन्वनने प्रगल्भां

आराधयामि भवतीं मनसा मनोज्ञाम् ॥ ३८॥

कर्मात्मिके जय जयाखिलधर्ममूर्ते
चिन्मात्रिके, जय जय त्रिगुणस्वरूपे ।
कल्माषधर्मपिशुनान् करुणामृतार्द्रैः
सम्मार्ज्य सम्यगभिषिञ्च दृगञ्चलैर् नः ॥ ३९॥

षणामसि त्वमधिदैवतमक्षराणां
वर्णत्रयोदितमनुप्रकृतिस्त्वमेव ।
त्वन्नाम विश्वमनुशक्तिकलं त्वदन्यत्
किन्नाम दैवतमिहास्ति समस्तमूर्ते ॥ ४०॥

या कापि विश्वजनमोहनदिव्यमाया
श्रीकामवैरिवपुरर्धहरानुभावा ।
प्राकाश्यते जगदधीश्वरि! सा त्वमस्मान्
मूकाननन्यशरणान् परिपाहि दीनान् ॥ ४१॥

कर्त्र्यै नमोऽस्तु जगतोनिखिलस्य भर्त्र्यै
हर्त्र्यै नमोऽस्तु विधिविष्णुहरात्मशक्त्यै ।
भुक्त्यै नमोऽस्तु भुवनाभिमतप्रसूत्यै
मुक्त्यै नमोऽस्तु मुनिमण्डलदृश्यमूर्त्यै ॥ ४२॥

षड्वक्त्रहस्तिमुखजुष्टपदस्य भर्तु-
रिष्टोपगूहनसुधाप्लुतमानसस्य ।
दृष्ट्या निपीय वदनेन्दुमदक्षिणाङ्के
तुष्ट्या स्थिते! वितर देवि! दयावलोकान् ॥ ४३॥

यन्तान्तरं भवितृभूतभवं मया यत्
स्वप्नप्रजागरसुषुप्तिषु वाङ्मनोऽङ्गैः ।
नित्यं त्वदर्चनकलासु समस्तमेतत्
भक्तानुकम्पिनि! ममास्तु तव प्रसादात् ॥ ४४॥

स्वाहेति सागरसुतेति सुरापगेति
व्याहाररूपसुषमेति हरिप्रियेति ।
नीहारशैलतनयेति पृथक्प्रकाश-
रूपां परेशमहिषीं भवतीं भजामः ॥ ४५॥

हारस्फुरत्कुचगिरे! हरजीवनाथे!

हारिस्वरूपिणि! हरिप्रमुखाभिवन्द्ये! ।
हेरम्बशक्तिधरनन्दिनि! हेमवर्णे!
हे चण्डि! हैमवति! देवि! नमो नमस्ते ॥ ४६॥

ये तु स्वयंवरमहास्तवमन्त्रमेतं
प्रातर्नराः सकलसिद्धिकरं जपन्ति ।
भूतिप्रभावजनरञ्जनकीर्तिसौन्द-
र्यारोग्यमायुरपि दीर्घममी लभन्ते ॥ ४७॥

शतक्रतुप्रभृत्यमर्त्यतत्यभिप्रणत्युप-
क्रमप्रसृत्वरस्मितप्रभाञ्चितास्यपङ्कजे ।
हरप्रिये! वरप्रदे! धराधरेन्द्रकन्यके
हरिद्रया समन्विते दरिद्रतां हर द्रुतं ॥ ४८॥

स्वयंवरमन्त्रम्

न्यासं

अस्य श्रीस्वयंवरामन्त्रस्य ब्रह्मा ऋषिः देवीगायत्री
छन्दः देवी गिरिपुत्री स्वयंवरा देवता ।
मम अभीष्टसिध्यर्थे जपे विनियोगः ॥

ह्रां इत्यादिना न्यासः ।

ध्यानं

शम्भुं जगन्मोहनरूपपूर्णं
विलोक्य लज्जाकुलितां स्मिताढ्याम् ।
मधूकमालां स्वसखीकराभ्यां
सम्बिभ्रतीमद्रिसुतां भजेयम् ॥

-पञ्चपूजां लं इत्यादि-

ॐ ह्रीं योगिनि योगिनि योगेश्वरि योगभयंकरि
सकलस्थावरजंगमस्य मुखहृदयं मम वशं
आकर्षयाकर्षय स्वाहा ।

॥ स्वयंवरध्यानम् ॥

हेमाभाम्मतिवागतीतगुणशीलान्तामशिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याणदामान्विताम् ।

श्यामामीश्वरमुद्यतां वरयितुं त्रैलोक्यसम्मोहिनीं
कामापादनकल्पवल्लिमनिशं वन्दे परां देवताम् ॥ १॥

बालार्कायुतसुप्रभां करतले रोलम्बमालाकुलां
मालां सन्दधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम् ।
मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहिनीं
वन्दे देवमुनीन्द्रवन्दितपदामिष्टार्थदां पार्वतीं ॥ २॥

विधृतवरणमाल्या सर्वरत्नांगभूषा
निखिलनयनचेतोहारिरूपाग्र्यवेषा ।
भवतु भवदभिष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकृष्टिनित्यप्रहर्षा ॥ ३॥